दिवस्कण्वा स्कन्दवः[1] (ऋ. वे. १. ४६. १)

वृत्रस्य यत् बद्धधानस्य रोदसी (ऋ. वे. १. ५२. १०)

युवं[2] वरे सुम्णे[3] (ऋ. वे. ८. २६. २)

इति ।

केतुं कृण्वन् । रात्रौ स्वपतो गतप्रज्ञस्य प्रज्ञोदयं कुर्वन् तमसा तिरोहितरूपाणां गवादीनां रूपं च ज्ञायते । केतुं कृण्वन् प्रज्ञानरहिताय पेशश्चापेशसे समजायथाः त्वमुषोभिः सह । तमिममाश्चर्यं मनुष्याणां निवेदयितुं त्वां सम्बोधयन्ति मर्त्या इति ॥ (३)

. . .[4]णिभिर्देवलोकात् गावोऽपाहृता अन्धकारे प्रक्षिप्ता इन्द्रे[5] मरुद्भिरुषोभिस्सहाजयदिति इतिहासप्रसक्ता मरुतः षड्भिः सूक्तमध्यक्भिस्तूयन्ते[6] ॥

**आदह॑ स्व॒धामनु॒ पुन॑र्गर्भ॒त्वमे॑रि॒रे । दधा॑ना॒ नाम॑ य॒ज्ञियम् ॥**

अनन्तरमेव स्वधामन्नमुदकं वा अनु । तस्योत्पातनार्थं[7] स्वयाः[8] स्वयं धारयति । पुनर्मध्ये प्रागन्यस्माद्दतुकालात् । गर्भत्वमेरिरे प्रेरयन्ति ।

[1] Read दिवस्कण्वास इन्दवः

[2] Folio 4*b* ends here.

[3] Read वरो सुषाम्णे. In रो only the ए mark and र् visible. Then a part worm-eaten. The next syllable visible is म्ण. The end of सु is also decipherable. The scribe has omitted षा.

[4] Read पणि. After इति a portion is worm-eaten. There is space for 2 letters. My copyist has transcribed the portion as वसणि. Now when I examine, no letter is distinctly seen. णि is distinct.

[5] Read इन्द्रेण.

[6] Read सूक्तमध्यग्भिः स्तूयन्ते.

[7] Read तस्योत्पादनार्थं.

[8] स्वया not wanted.

गर्भो गृहे गृह्णातीति । गर्भत्वं ग्रहणसामर्थ्यम् । अत्र शाट्यायनकम्—पुनरेव तृतीयेऽह्नि गर्भत्वमेरयन्ते । चतुर्थस्याह्नः प्रजात्यै इति । अनन्तरमेवेति पूजायां पर्यवसानादाख्यातमुदात्तमासीत्[1] । दधाना नाम वज्ञियम्[2] । ईदृङ् चान्यादृङ् चेति मरुतां यज्ञियं नाम देहि प्रजापतितो लब्धम् । नाम नमेः प्रह्वीकरणार्थात् । अमन्त्रितो[3] हि प्रह्वीभवति ॥

आदह स्वधाम् । अनन्तरमेव वृष्टेः मरुतः अन्नार्थं पुनरपि गर्भत्वं प्राप्नुवन्ति । अष्टौ मासास्तिरोभूता वर्तन्ते वर्षाभ्योऽनन्तरम् । आश्चर्येऽहशब्दः । दधाना नाम यज्ञानामीदृक् च तादृक् चेत्यादिकम ॥　　　(४)

**वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनु ॥**

वीळुचित् । वीळु दृढं वीळयतेर्दृढार्थात् । दृढम् । आरुजत्नुभिः प्रजापतितो लब्धं नाम नमेः दृढमपि भजद्भिः पर्वतादि[4] । गुहा चिदिन्द्र । गुहो[5] निगूहनार्थात् । गुहायां निहिताः । अन्हविदः[6] । वह्निभिर्वोवदृवभि[7]-मेरूद्भिः । उद्रिया[8] गाः । उस्त्रिया[9] उत्सरन्तीति ॥

[1] cf. Pāṇini, 8, 1, 39.

[2] Read यज्ञियम्. After दधाना and before नाम, a letter which looks like त or क written and a dot placed above to mark that it is to be deleted.

[3] Read आमन्त्रितो.

[4] After दृढार्थात् the Ms. reading is corrupt. There is repetition of a small bit from the previous stanza. Read दृढार्थात् । दृढमपि । आरुजत्नुभिः भञ्जद्भिः पर्वतादि ।

[5] Read गुहा.

[6] Read अन्वविन्दः

[7] Read वह्निभिर्वोढृभि.

[8] Read उस्रिया.

[9] Read उस्रिया.

वीळुचित्। दृढमपि पर्वतसान्वादि आभिमुख्येन भञ्जद्भिः पर्वतस्य गुहायामपि इन्द्र त्वां वोढृभिर्मरुद्भिः त्वं पणिभिरपहृता गा अन्वविन्दः ॥ (५)

**देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः। महामनूषत श्रुतम् ॥**

देवयन्तः। देवानिछन्तः यथा मतिं अनुमन्तारं ब्राह्मणम्। अभियन्ति। एवमच्छानूषत अहिष्टुवन्ति[1] यभितुष्टुवुः[2]। विदद्वसुं वेदयद्वसुसुमुदरम्[3]। गिरो गिरतेः स्तोतारौ[4]। ममहान्तः[5]। मरुतां गणं विश्रुतम् ॥

देवयन्तः। देवानिच्छन्तो यथा पूजनीयमिन्द्रमभिष्टुवन्ति विदद्वसुं वेदयद्वसुमुदारं गिरः स्तोतारो महान्तं मरुद्गणमिति ॥ (६)

**इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा। मन्दू समानवर्चसा ॥**

इन्द्रेण। निरुक्तम्[6]। इन्द्रेण हि सदृश्यसे[7] संगच्छमानोऽबिभ्युषा मरुद्गणः। तौ युवां मदिष्णू स्थ। समानवर्चसाविति। ये तु न प्रगृह्णन्ति तेषाममुदृदिष्णुतेन्द्रेणेति[8]। तथा च यास्कः—अपिवा इन्दुना[9] तेनेति स्यात्। समानवर्चसा इत्येतेनैव व्याख्यातम् (नि. ४. १२) इति ॥

[1] Read अभिष्टुवन्ति.

[2] Read अभितुष्टुवुः

[3] Read वेदयद्वसुमुदारम्.

[4] Read स्तोतारः

[5] Read महां महान्तम्.

[6] cf. Nirukta 4, 12.

[7] Read संदृश्यसे.

[8] The Ms. after प्रगृह्णन्ति is corrupt and unintelligible. Perhaps to read तेषां मदिष्णुना इन्द्रेणेति.

[9] Read मन्दुना.

इन्द्रेण सं हि । इन्द्रेण हि सन्दृश्यते स सङ्गच्छमानोऽबिभ्युषा मरुद्गणः युद्धार्थम् । इन्द्रमरुद्गणौ मदिष्णू भवथः संयुक्तौ समानवर्चसौ । यद्वा मन्दुना समानवर्चसेन्द्रेणेति ॥ (७)

**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥**

अनवद्यैरवद्यरहि[1] द्योतमानैः मुखो[2] वायुः । सहस्वदुदकं[3]मर्चति प्रयच्छति । गणैस्सप्तभिः । इन्द्रस्य कमनीस्सतो[4] । मखो वायुः[5] खदिमीत इति[6] । यद्वा बलं सहस्वदिति ॥

अनवद्यैः । अवद्यरहितैरभिद्योतमानैः सह स्तोता सहस्वन्तमिन्द्रमर्चति गणैरिन्द्रस्य प्रियैः । गणशब्द एकवचनबहुवचने पर्यायेण भवतः ॥ (८)

**अतः परिज्मन्ना गहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ॥**

अतः । अतोऽन्तरिक्षात् परितो गन्तः मरुद्गण । आगच्छ । द्यौरादित्यो भवति । तस्य रोचनं द्यौः । ततो वा । परोक्षस्तृतीयः[7] पादः । स भृञ्जति[8] संश्लेषणार्थः[9] । संयोज[10]यति स्तुतीः अस्मिन् मरुद्गणे स्तोतेति ॥

[1] Read रहितैः

[2] Read मखो.

[3] Looks more like मुदक than दुदक.

[4] Read कमनीयैः.

[5] Space for 3 syllables left blank between वा and युः

[6] This is unintelligible. This is the etymology of मख to mean वायु. Something about ख. The letters ख and मी are slightly worm-eaten.

[7] Folio *5a* ends here.

[8] Read समृञ्जति । ऋञ्जतिः

[9] र्थः mostly worm-eaten.

[10] य in यो mostly worm-eaten.

अतः परिज्मन्। अतोऽन्तरिक्षात् परितो गन्तर्मरुद्गण आगच्छ आदित्यस्य रोचनाल्लोकात्। अधिपरी सप्तमीपञ्चम्योरर्थं स्फुटीकुरुतः। अस्मिन् मरुद्गणे सम्प्रसाधयति स्तुतीर्मधुच्छन्दाः ॥ (९)

**इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥**

इतः। इतो वा अवमाल्लोकात् सत्[1]। सातिमिन्द्रमीमहे याचामहे[2]। यद्यस्मिन्[3] लोके इन्द्रो वर्तते तत आगच्छतु[4] प्रयच्छतु मह्यं सा[5] सातिमित्यर्थः। दिवो दीप्ताद्वा। पारार्थिवादधि[6]। पृथिवी अन्तरिक्षनाम। महो वा रजसस्तृतीयालोकात्[7]। रजो लोको भवति रजतेर्गत्यर्थात्। परोऽवरीयांसो वा इमे लोकाः (ऐ. ब्रा. १. २५) इत्युक्तमिति[8] ॥

इतो वा। अत उत्तरमिन्द्र एव देवता। कुतः इन्द्र आगच्छतीति न वयं जानीमः। तमिन्द्रमस्या भूमेरागच्छन्तं देयं धनं याचामहे। अपिवा दीप्तात् पार्थिवाल्लोकात्। पृथिवीत्यन्तरिक्षनाम। इन्द्रं महो वा रजसः स्वर्गादिति॥ (१०)

---

[1] सत् not wanted.

[2] हे, चा and हे mostly worm-eaten.

[3] स्मि partly worm-eaten.

[4] च्छतु nearly completly worm-eaten.

[5] सा not wanted.

[6] Read पार्थिवा.

[7] Read याल्लोकात्.

[8] The figure 6 is written here to mark the end of the Sūkta.

**इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥**

इन्द्रमित् । इन्द्रमेव गाधिन उद्गाताशो[1] । बृहता स्तोत्रेण सम्ना[2] वा स्तुवन्ति । गाथा[3] गातेः । इन्द्रमकेभिः[4] शस्त्रैः । अर्कोऽर्चतेः । यदनेनार्चन्ति भूतानि यत् सूर्योऽर्चन्विनीयो भूतैः[5] । अर्किणः स्तोतारः । इत्थमिन्द्रं वाह्योऽ[6]नूषत । वाण्यो वणतेः शब्दार्थ्यादिति[7] ॥

इन्द्रमित् । इन्द्रमेवोद्गातारो बृहता साम्ना स्तुवन्ति । इन्द्रं शस्त्रैर्होतार इन्द्रमेव सर्वा गिरः स्तुवन्ति ॥ (१)

**इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥**

इन्द्र इत् । एकाकी चरन्निन्द्र एव स्वाश्रयोऽसहायभूतः स एव संयोजयिता उक्तिमात्रेण युज्यमानयोरिन्द्रो वज्री हिरण्मयसर्वशरीरः ॥ (२)

**इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ॥**

इन्द्रो दीर्घाय । इन्द्रो मनुष्याणां चिराय दर्शनाय दिवि सूर्यमारोहयत् । तेजोभिश्च विविधं वर्षार्थं मेघं प्रेरयति ॥ (३)

**इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥**

[1] Read उद्गातारो ।

[2] Read साम्ना.

[3] Read गाथी.

[4] Read मर्केभिः

[5] Not quite intelligible.

[6] Read वाण्यो.

[7] Read शब्दार्थादिति.

इन्द्र वाजेषु । इन्द्र क्षुद्रेषु सङ्ग्रामेष्वस्मान् रक्ष महत्सु च । उग्र उद्गीर्ण उद्गीर्णैः पालनैः ॥ (४)

अस्योत्तरा भूयसे निर्वचनाय ।

**इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ॥**

इन्द्र[1] । इन्द्रं वयं महायुद्धे हवामहे । इन्द्रमल्पे च युद्धे । अर्भोक्तेः प्रारणार्थात्[2] । युजं सहकारिणमुपद्रवेषु वज्रिणम् ॥

इन्द्रं वयम् । इन्द्रं वयं महति सङ्ग्रामे हवामहे इन्द्रमल्पे च सहायमुपद्रवेषु आयुधवन्तम् ॥ (५)

**स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥**

स नः । स नो वर्जिर्षितः[3] । अमुं चरुम् । चरुश्चरतेः । स्थलीमेघे पर्यवसानम्[4] । सत्रादावन् मदार सत्रे अव्यधर्महान्नाम[5] । अपावृधि अस्मभ्यम् । अत्र निरुक्तम् । अप्रतिष्कुतोऽप्रतिष्कुतः[6] अप्रतिस्खलितो वा (नि. ६. १६) इति । स्कौतिस्तक्षणार्थः । अरिभिरतनूकृतः इति

[1] The commentary on stanzas 2, 3 and 4 are missing in the Ms.

[2] Read प्रेरणार्थात् । cf. Nirukta, 3, 20.

[3] Read वर्षितः . There is a short horizontal line above र्जि in the Ms. to mark its deletion.

[4] वसा mostly worm-eaten.

[5] From स्थलीमेघे the passage is unintelligible.

[6] Read स्कृतः

शाकलम्[1] । पुनरस्मभ्यमिति पदं वाक्यान्तरत्वाच्च पूरकम्[2] । स चाथ न्यायः[3] सार्वत्रिक इति ॥

स नः । स नो वर्षितरमुं मेघं महतो दातस्तेजोभिरपावृधि शत्रुभिरप्रतिशब्दितोऽप्रतिकृतो वा । नोऽस्मभ्यमित्यनयोः पूरणमेकम् ॥ (६)

**तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ॥**

तुञ्जे तुञ्जे । निरुक्तम् ।[4] दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणः नास्य तैर्विदामि[5] समाप्तिं स्तुतेरिति । दाने दाने इन्द्रस्योत्तरोत्तरभृषीणां[6] स्तुतयः प्रादुर्भुवन्ति[7] । न तास्वहमस्य दानानुगुणां स्तुतिं विन्दविति[8] ॥

तुञ्जे तुञ्जे । दाने दाने उत्तरे ऋषय एनं स्तुवन्ति । तेषु स्तोमेषु नास्याहं दानानुगुणां सुष्टुतिं विन्दामि ॥ (७)

**वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥**

[1] Reference not clear.

[2] र worm-eaten.

[3] Read स चायं न्यायः

[4] Nirukta, 6, 18.

[5] Read विन्दामि.

[6] Read मृषीणां.

[7] Read प्रादुर्भवन्ति.

[8] Read विन्दामीति.

वृषा[1] । सेक्ता ऋषभः यूथानीव गवाम् । यूथो नेय म्मे मिश्रणार्थात्[2] । वंसगो निनीयासु[3] गोषु सक्तः । यद्वा वंसा वननिवाभावः[4] । ता अनुगच्छन् । कृष्टीः प्रेरयत्योजसा सपत्नभूताः । ईशानो अप्रतिष्कुतः ॥

वृषा यूथेव । वर्षिता गोयूथानीव वननीयगमन ऋषभ इन्द्रो वीरो युयुत्सून् मनुष्यान् बलेनाभिगच्छति सर्वस्येशानोऽप्रतिकृतः ॥ (८)

**य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ॥**

य एकः । एक एतेः प्रेरकः । य एकश्चर्षणीनां भवति । तस्मिन्नावेशया इत्यस्यामेष पादो विसृष्टः[5] । तस्मादयमस्यार्थउक्तः[6][7] । यश्च वसूनां[8]मिरज्यति स इन्द्रः पञ्चानां[9] क्षितीनाम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीति पञ्च क्षितयः । यद्वा निषादपञ्चमाः चत्वारो वर्णाः । तानि वसूनिर्दातीति[10] वाक्यसमाप्तिः । यस्य . . नि[11] हस्तयोः पञ्चक्षितीनां वस्विति[12] ॥

[1] वृ completely worm-eaten.

[2] Read यूथो यौतेर्मिश्रणार्थात्. cf. Nirukta, 4, 24.

[3] Read वननीयासु य first written and struck off: then another य written below.

[4] Read वननीया गावः

[5] This is a frequent remark met with in this commentary.

[6] Folio 5b ends here. द worm-eaten.

[7] Not quite intelligible.

[8] ना worm-eaten.

[9] न्द्रः, प and ना worm-eaten.

[10] Read वसूनि ददातीति.

[11] Two letters broken. The आ mark in the second syllable is in tact; the syllable appears to be चा.

[12] ञ्च, नां and वा wcrm-eaten.

य एकः । य इन्द्रो मनुष्याणां पञ्चानां क्षितीनां निवसताम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीति पञ्चत्वम् । तेषां प्रदेयानां धनानामीष्टे । पूर्वस्यामृचि वाक्यस्य परिसमाप्तिः ॥ (९)

**इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥**

इन्द्रं वः । इन्द्रं वो युष्मभ्यम् । हवामहे । विश्वतस्परि विश्वतस्परि[1] सर्वेभ्योऽन्येभ्यो जनेभ्यः । पर्यधी पञ्चम्याः सपूर्व्याश्चार्थं स्फुटीकुरुतः । स इन्द्रोऽस्माकमस्तु केवलः[2] । सर्वोऽसाधारण एनं विचलेयुरिति केवलः[3] ॥

इन्द्रं वः । व इति पञ्चमी । वो जनेभ्यः सर्वेभ्य एव वयमिन्द्रं हवामहे । सोऽस्माकमस्त्वसाधारणः ॥ (१०)

---

**एन्द्रं सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ॥**

एन्द्र । आहरेन्द्र सानसिं रशियियं[4] भजनीयम् । सानसिम् । सने[5]र्भजनार्थादसिप्रत्ययः । सजित्वानं जित्वभिसहिकम्[6] । स्वीरम्[7] । सदासहं सदाहिएवुकम्[8] । वर्षिष्ठं वृद्धममूतये रणाय[9] ॥

[1] विश्वतस्परि repetition not wanted.

[2] वल worm-eaten.

[3] Not quite intelligible. There is the figure 7 put here.

[4] Read सानसिं रयिं.

[5] स in सने worm-eaten. From the small bit visible, it does not appear to be स.

[6] Read जित्वभिस्सहितम् ।

[7] Not intelligible; perhaps to read सवीरम्.

[8] Read सदा अभिभावुकम्.

[9] Read वृद्धम् । ऊतये रक्षणाय.

एन्द्र सानसिं रयिम्। आहरेन्द्र भजनीयं रयिं जयशीलपुरुषयुक्तं सदा शत्रूणामभिभवितारं वृद्धतमं रक्षणायास्मभ्यम् ॥ (१)

**नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता ॥**

नियेन । निरुणयामहै[1] । येन धनेन । वृत्राणि मुष्टिहत्ययेत्यौपमिकम् । मुष्टिहननेनैव[2] शत्रुम् । मुष्टिममुष्णा तेन[3] । इन्द्र त्वया रक्षिताः । अर्वता बलिना । अर्वा अर्तेरभिभवकर्मणः । तदेतदिन्[4]द्रविशेषणम् । अपि वा येनेत्यनेनै[5]काधिकरणः । उत्तमौ निपूरकावेति[6] ॥

कीदृशमित्याह नि येनेति । येन धनेन मुष्टिहननेन दारिद्र्याणि वयं निरुन्ध्मः । पादान्तरे पुनर्निः प्रयुज्यते । त्वया रक्षिताः शत्रूंश्च येनाश्ववता निरुणधामहै तमाहरेति ॥ (२)

अस्योत्तरा भूयसे निर्वचनाय ।

**इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि । जयेम सं युधि स्पृधः ॥**

इन्द्र । इन्द्र त्वोता वयमाददीमहि । वज्रमायुधम् । व्यना व्यनं[7] हन्तारम् । आदत्तेन च सञ्जयेमम[8] स्पर्धमानात् सपत्नात् ॥

[1] Read निरुणधामहै.

[2] Read हननेनेव.

[3] Read मुष्टिर्मुष्णातेः

[4] न्द्र partly worm-eaten.

[5] न in नै worm-eaten.

[6] Read उत्तमौ नी पूरकाविति.

[7] Read घना घनं.

[8] One म unnecessary.

इन्द्र त्वोतासः । इन्द्र त्वया रक्षिता वयं हन्तृ आयुधमाददीमहि संजयेम युद्धे स्पर्धयितॄन् शत्रूनिति ॥　　　　(३)

**वयं शूरे॑भि॒रस्तृ॑भि॒रिन्द्र॒ त्वया॑ यु॒जा व॒यम् । सा॒स॒ह्याम॑ पृतन्य॒तः ॥**

वयं शूरेभिर्बलिभिः । शूर[1] शृणातेः । अस्तृभिर्योद्धृभिः । इन्द्र त्वया च सहजस्पर्धमानात् येनाभिहिभवेम । पृतनाम् पृतन्यते यकर्मणः[2] ॥

वयं शूरेभिः । वयं शूरैरायुधानां क्षेप्तृभिः त्वया च सहायेनाभिभवेम सङ्ग्रामं कर्तुमिच्छतः । पुनर्वयमिति पूरणम् ॥　　　　(४)

**म॒हाँ इन्द्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑ । द्यौर्न प्र॑थि॒ना शवः॑ ॥**

महान् । महानिन्द्रः परश्च सर्वस्मादूर्ध्वमवस्थितः । इतरोऽवस्थित[3] इतरवचनश्चेर्था[4]दाद्युदात्तः ।

परं भृत्यो[5] अनुपरे हि (ऋ. वे. १०. १८. १)

इति । परश्च नु भवति । महित्वमस्तु वज्रिणे भूयश्च महत्वमस्त्वस्मिन् संग्रामे । अस्मे[6] द्यौरिव च न[7] विस्तीर्णं प्रथिम्ना । शवो बलमस्त्विति ॥

महाँ इन्द्रः । महनीय इन्द्रस्तारकश्च शत्रूणाम् । तस्मै सदा महित्वमस्त्विति स्वयं चाशास्ते । द्यौरिव विस्तीर्णतया बलमस्य भवति ॥　　　　(५)

[1] Read शूरः

[2] Read त्वया च सहायेन स्पर्धमानान् अभिभवेम । पृतना पृतन्यतेर्वधकर्मणः ।

[3] इतरोऽवस्थित not wanted.

[4] द्या not wanted.

[5] Read मृत्यो.

[6] Not wanted.

[7] Not wanted.

**समोहे वा य आशत नरस्तोकस्य सनितौ। विप्रासो वा धियायवः ॥**

समोहे । समोहस्संग्रामः । ओहतिः प्रेरणार्थः । तस्मिन्नुपस्थिते । मध्यवा[1] । समोहमिति[2] मध्यो[3] णमुलन्तः । ये नरः । इन्द्रमाशत स्तुतिभिः । ये वा नर इन्द्रमाशत स्तुतिभिः[4] । ये वा नरस्तोकस्य सतिको[5] पुत्रस्य भजनार्थम् । तोकस्तुचेः प्रेरणार्थात् । ए वा[6] ब्राह्मणा[7] धीकामास्ते सर्वे तन्तुकाममिन्द्रालंभन्ते[8] । धीर्मेधा[9] ध्यायतेः । कर्म चेत् दधातेरिति ॥

समोहे वा । सङ्ग्रामजिगीषया ये एनं युद्धे आप्नुवन्ति मनुष्या अपत्यस्य वा भजनार्थं ये वा प्राज्ञाः कर्मकामाः उत्तरत्र सम्बन्धः ॥ (६)

**यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ॥**

यः । कुक्षिः कुषेरवलेखनार्थात् । अन्तर्विकुषितः कृतावकाशो भवति । यः कुक्षिस्तव[10] सोमपातमः । समुद्र इव पिन्वते अन्तरिक्षमिव[11]

[1] Read मध्ये वा.

[2] Read समोह इति.

[3] Not wanted.

[4] ये वा नर इन्द्रमाशत स्तुतिभिः not wanted.

[5] Read सनितौ.

[6] Read ये वा ; ए partly worm-eaten.

[7] Folio 6*a* ends here.

[8] Not intelligible.

[9] धा completely worm-eaten.

[10] शो भवति and कुक्षिस्तव partly worm-eaten.

[11] न्व and अन्तरिक्षमिव mostly worm-eaten.

क्षरति कामान् । समुद्रः समुद्रवन्त्यस्मादापः[1] । उर्वीरिव चापः । काकु[2] आप इति द्वितीयान्तम् । आप आप्नोतेः । काकुदः ककुदो जातम् । ककुच्च कण्ठे समुच्छ्रितो[3] देशः । तं कुक्षिं सोमेन पूरयासो[4] । यद्वा स कुक्षि[5] कुर्वरापः[6] पिन्वन् काकुद इव भवति ॥

यः कुक्षिः । तेभ्यः सर्वेभ्यस्तांस्तान् कामान् योऽस्य कुक्षिरतिशयेन सोमस्य पातमः समुद्र इव सदा अक्षीण उद्गमयति स कुक्षिर्बहून्युदकानि पिबं-स्तालिवव भवति । तद्धि निष्ठीवनेऽपि न शुष्यति इति ॥　　　　(७)

एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥

एव[7] हि । लब्धकामस्य स्तुतिः । एवं स्यस्य[8] सूनृता वाक् भद्रा सुनर्ततात्[9] । अपि वा [10]सुप्रेरणात् । विरप्शी । विविधेन वरणेन युक्ता । महकामसु चाम्नातम्[11] । होम त्वं गवां प्रदानान्मही महनीया

[1] पः completely worm-eaten. A small bit remains which cannot be identified as a part of this syllable.

[2] काकु not wanted.

[3] Read ककुप् च कुजतेः समुच्छ्रितो (cf. Nirukta, 7, 12). The letter ण्ठे is not quite legible. च्छ्र् partly worm-eaten.

[4] Perhaps to read पूरय or पूरयामः

[5] Read स कुक्षिः

[6] Not quite intelligible.

[7] Read एवा.

[8] Read ह्यस्य.

[9] Perhaps to read सूनृता भद्रा वाक् सुनर्तनात् ।

[10] In सु only स् intact. The next part worm-eaten. It looks like the उ mark.

[11] Not intelligible.

इवति[1] । पक्वफला शाखेव दाशुषे भवति । शाखा शेरते खे शक्नुवन्ति वा चलितुमिति ॥

एवा ह्यस्य । एवं ह्यस्य वाक् विविधरपणा पशुमती महती पक्वफलशाखेव यजमानाय भवति ॥ (८)

एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित्सन्ति दाशुषे ॥

एवा हि । एवं हि ते त्वत्ते[2] । विभूतयः पशुपुत्रलाभाः । ऊतयश्चेन्द्र भवन्ति मावते मादृशाय । सद्यश्चित् क्षिप्रमेव दाशुषे इति ॥

एवाहि ते । एवं हि ते विभूतयो रक्षणानि च मत्सदृशाय यजमानाय तदानीमेव भवन्त्त्विति ॥ (९)

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये ॥

एवा हि । एवं ह्येन्द्रस्य[3] काम्या कमनीये । स्तोत्रमुक्थं च शंसनीये[4] भवतः । इन्द्रा[5] सोमपीतये । पादभेदाद्विभक्त्योर्भेदः[6] ॥

[1] From होम it must be the explanation of गोमती मही. Perhaps to read गोमती गवां प्रदानात् । मही महनीया भवति ।

[2] ते त्व mostly worm-eaten. Read ते तव.

[3] Read ह्यस्येन्द्रस्य.

[4] त्वं written between च and शं and then dots put above to mark its deletion.

[5] Read इन्द्राय.

[6] There is the figure 8 here to mark the end of the Sūkta.

एवा ह्यस्य। यथा ह्यस्याशंसिषमेवमस्य कमनीये स्तोत्रशस्त्रे शंसनीये सोमपानार्थमिन्द्राय। विरम्याभिधानात् षष्ठीचतुर्थ्यौ सङ्गच्छेते। अर्थाभेदादित्यपरे इति ॥ (१०)

---

**इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः। महाँ अभिष्टिरोजसा ॥**

इन्द्रेहि। इन्द्रागच्छाद्यच[1] अन्धसोऽन्नेन सोमेन। अन्धोऽत्तो न चक्षुश्चेन्नास्य ध्यानमस्तीति[2]। विश्वेहिः[3] सोमपर्वभिः अंशुभिः अभिषुतेन अन्धसा। पर्व पृणातेः। महान् अभिष्टिरोजसा अहिष्टि[4]रमिभविता अह्येषणादिति[5] ॥

इन्द्रेहि। इन्द्रागच्छ माद्य चान्नेन विश्वैः सोमलतापर्वभिरभिषुतेन महान् बलेन शत्रूणामभिभवनशीलः ॥ (१)

**एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने। चक्रिं विश्वानि चक्रये ॥**

[1] Read इन्द्रागच्छ। आगत्य च.

[2] Perhaps to read अन्धोऽन्नम्। अचक्षुश्चेत् नास्य ध्यानमस्तीति (cf. Nirukta, 5, 1).

[3] Read विश्वेभिः।

[4] Read अभिष्टि.

[5] Read अभ्येषणादिति.

एम् । आसृजतैनं सुते सति मादकं रसं इन्द्राय मन्दिने[1] । मन्दतिस्तृप्तिकर्मा । चक्रिं[2] विश्वानि कर्माणि धनानि वा चक्रयो[3] ॥

एमेनम् । आसृजत एनं सोमं सुते ईमिति पूरणम् । तर्पयितारमिन्द्राय तर्पयित्रे । विश्वस्य कर्मणः कर्तारः । विश्वानि कर्माणि चक्रये । 'न लोकाव्यय (पा. २. ३. ६९) इति षष्ठी प्रतिषिद्धा ॥ (२)

**मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ॥**

मत्स्व । मन्दस्व सुशिप्र । शिप्रे हनू नासिके[4] वा । (नि. ६. १७) इति यास्कः ।

वि ष्यस्व शिप्रे वि स्तजस्व[5] धेने[6] (ऋ. वे. १. १०१. १०)

इति । मदिभिः स्तोमैः मदकरैः[7] स्तोमैः । सचा सखा सन् एषु सवनेषु आ । सप्तमीपञ्चम्योः[8] पर आकारः[9] तदर्थं स्फुटीकरोति ॥

मत्स्वा सुशिप्र । मन्दस्व सुहनो मादयितृभिः स्तोमैः सर्वस्य द्रष्टः सहास्माभिरेषु सवनेषु । आकारः सप्तम्यर्थं स्फुटीकरोति ॥ (३)

[1] रसमिन्द्राय मन्दिने. Here nearly all letters are mostly worm-eaten.

[2] चक्रिं partly worm-eaten.

[3] Read चक्रये.

[4] Read नासिके.

[5] Read विसृजस्व.

[6] This is quoted in Nirukta, 6, 17. This quotation here seems superfluous.

[7] Read मन्दिभिः सदकरैः

[8] सप्त and ञ्च mostly worm-eaten.

[9] का completely worm-eaten.

**असृ॑ग्रमिन्द्र ते गिरः॒ प्रति॒ त्वामुद॑हासत । अजो॑षा वृष॒भं पति॑म् ॥**

असृग्रम् । असृग्रसृष्टा आसम्[1] । इन्द्र ते गिरः प्रत्युदाहासत[2] त्वां प्रत्युद्गता आसन् । त्वं च सेवितवानसि । स्तोमानां वृषभं षिकारम्[3] । पतिमीश्[4]वरं च तेषामिति[5] ॥

असृग्रमिन्द्र । असृजमिन्द्र ते स्तुतीः । सृष्टाश्च तास्त्वां प्रत्युद्गच्छन्तु । त्वं च सेवितवानसि स्तुतीनां वर्षितारं मां स्तोमानामीश्वरम् ॥　　　　(४)

**सं चो॑दय चि॒त्रम॒र्वाग्राध॑ इन्द्र॒ वरे॑ण्यम् । अस॒दित्ते॑ वि॒भु प्र॒भु ॥**

सञ्चोद । सञ्चोदय चित्रमर्वागहिमुखम्[6] । रायो[7] धनम् । राध्नुवन्त्यनेन । इन्द्र वरेण्यं अस्ति खला ते[8] विभु च रायः ॥

संचोदय । सह प्रेरय पूजनीयं धनमस्मदभिमुखमिन्द्र वरणीयम् । अस्ति हि ते विभु च प्रभु च धनम् ॥　　　　(५)

**अ॒स्मान्त्सु तत्र॑ चोद॒येन्द्र॑ रा॒ये रभ॑स्वतः । तुवि॑द्युम्न॒ यश॑स्वतः ॥**

[1] Perhaps to read असृग्रं सृष्टवानहम् or सृष्टवानासम्.

[2] Read प्रत्युदहासत.

[3] Read वर्षितारम्.

[4] Folio 6*b* ends here.

[5] षा completely worm-eaten.

[6] Read गभिमुखम्. ख mostly worm-eaten.

[7] यो completely worm-eaten.

[8] After व the ए mark of रे is in tact. Then the leaf is worm-eaten and the next letter in tact is ख. Read वरेण्यं अस्ति खलु ते.

अस्मान्[1] सुचोदध[2] तत्रेन्द्र[3] राये रभस्वत उद्युक्तान् । यत्र लभ्यते राय[4] । तुविद्युम्न बह्वन्न । द्युम्न द्योतदेतः[5] । यशस्वतः । यशो[6] वान्नं वा । धशस्वतश्च रुरुयशो दीप्त्यर्थारद्यशः कीर्तिरन्नं वेति[7] ॥

अस्मान् । अस्मान् सुष्ठु तत्र चोदय यत्र धनं लभ्यते इन्द्र धनार्थं वेगवतः स्तुतिप्रवृत्तानपि युद्धोद्युक्तान् बह्वन्न हविष्मतः ॥ (६)

**सं गोम॑दिन्द्र॒ वाज॑वद॒स्मे पृ॒थु श्रवो॑ बृ॒हत् । वि॒श्वायु॑र्धे॒ह्यक्षि॑तम् ॥**

सं गोमत् । संधेह्यस्मास्विन्द्र गोयुक्तं वाजयुक्तं पृथु विस्तीर्णम् । श्रवणीयमन्यम्[8] । बृंहितं विश्वयुँर्व्याप्तायुष्कं ददतश्चाप्यक्षितं क्षीणम्[10] ॥

सं गोमत् । गोमत् बलवच्चास्मासु विस्तीर्णं परिबृंहन्तमुच्छ्रितमन्नं धेहि सर्वायुस्त्वमक्षीणम् ॥ (७)

**अ॒स्मे धे॑हि॒ श्रवो॑ बृ॒हद्द्यु॒म्नं स॑हस्र॒सात॑मम् । इन्द्र॒ ता र॒थिनी॒रिषः॑ ॥**

[1] स्मान् completely worm-eaten.

[2] Read सुचोदय.

[3] न्द्र half worm-eaten.

[4] Read रायः

[5] Read द्युम्नं द्योततेः

[6] स्व partly, तः य completely and the ए mark in शो partly worm-eaten.

[7] The whole passage is corrupt and unintelligible; the letter र is written above the line between र्था and द्य.

[8] Read श्रवणीयमन्नम् ।

[9] Read विश्वायु.

[10] Read प्यक्षितमक्षीणम् ।

अस्मे । अस्मासु धेहि श्रवणीयं बृहत् द्युम्नमन्नम् । श्रवोत्र द्युम्नविशेषणीमु

जुष्टोभि[1] दूतो असि हव्यवाहनः (ऋ. वे. १. ४४. २)

इति तु स्वतन्त्रम् । अतो न विसृष्टः । सहस्रसातमं यत् द्युम्नं पुरुषसहस्रं भजते ता इषः स्त्वधा दत्ता इन्द्रा[2] रथयुक्ताश्च कुर्वन्तीति ॥

अस्मे धेहि । अस्मासु धेहि बृहदन्नं द्योतमानमनेकपुरुषसम्भक्तृ । दत्तानि तान्यन्नानि कुरु रथयुक्तानि ॥ (८)

**वसो॒रिन्द्रं॒ वसु॑पतिं गी॒र्भिर्गृ॒णन्तं॑ ऋ॒ग्मियं॑म् । होम॒ गन्ता॑रमू॒तये॑ ॥**

वसोः । [3]वसोर्वसुपतिमित्यैकार्थ्यादश्रुता[4] षष्ठी स्पष्टं निर्दिष्टा वसोरिति । एतेन

गवामसि गोपतिरेक इन्द्र (ऋ. वे. ७. ९८. ६)

इत्यादयो व्याख्याताः । गीर्भिर्गृणन्तः श्रियश्र[5] गच्छतेः स्मोत्रम्[6] । ह्वयामो गन्तारमवनार्थमिति ॥

वसोरिन्द्रं । वसोर्वसुपतिमिन्द्रं स्तुतिभिः स्तुवन्त ऋगर्हमाह्वयामो वयं गन्तारं रक्षणाय ॥ (९)

[1] Read द्युम्नविशेषणम् । जुष्टो हि.

[2] Read इषस्त्वया दत्ता इन्द्र.

[3] व worm-eaten.

[4] The word is not quite intelligible.

[5] Read गृणन्तः ऋग्मियम् । ऋक् ।

[6] Read स्तोत्रम् ।

सुतेसुते न्योकसे बृहद्बृहत एदरिः । इन्द्राय शूषमर्चति ॥

सुतेसुते । सुतेसुते सर्वेष्वेव सवनेषु । न्योकसे । श्रद्दधानो न्योकाः । तवाहमस्मि सख्येनोकं च इति । उचतेरोकस्थे वनम्[1] । निः प्रावण्यवचनः । प्रवणस्सेवनस्कथोक्तः[2] । बृहत् स्तोत्रम् । बृहते इन्द्राय । शूषं प्रियावहम् । शुषिः प्रीणनार्थः । अरिरर्तेः । स्तोत्रमर्चत्यावदन्ति ॥

सुते सुते । सर्वेषु सुतेषु न्योकसे आत्मीयगृहबुद्धिं कुर्वते महद्बलं महते इन्द्रायैव स्तोमानां प्रेरयिता स्तोता वदति ॥ (१०)

---

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥

गायन्ति । गायन्ति त्वा गायत्रिण उद्गातारो गायत्रं साम गायन्ति । अर्चन्त्यर्चनीयमकिणजस्त्रिणो[3] ब्राह्मणास्वा[4] शतक्रतो । वंशमिवोद्येमिरे[5] ।

[1] Read उचतेरोकः सेवनम् ।

[2] Perhaps to read प्रवणं सेवनं यस्य स तथोक्तः ।

[3] Read मर्किणः शस्त्रिणो.

[4] Read ब्रह्माणस्त्वा.

[5] मि and र् in रे worm-eaten.

वंशो वंशेः सन्तत्यर्थात् । वंशो[1] वनशयो भवति (नि. ५. ५) इति यास्क इति ॥

गायन्ति त्वा । गायन्ति त्वामुद्गातारः । अर्चन्त्यर्चनीयं होतारः । इत्थमुभये ब्राह्मणास्त्वां शतक्रतो वंशमिव बहुभिः स्तोत्रशस्त्रैरुद्यच्छन्ति ॥ १ ॥

**यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।**
**तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥**

यत्सानोः । यदा पुरुषो यज्ञाय सानोः सानुमारोहति[2] अत्यन्तमुञ्चतदेशं[3]मारोहति अरण्यम् । यदा भ्रभ्रर्यस्पष्ट[4] स्पृशति । कत्वं[5] कर्म । तदानीं तस्याभिलषितमत्यं[6] काममिन्द्रश्चेति[7] । ततो यूथेन मरुद्गणेन सह । वृष्णिर्वृषेः वर्षिता । तत्रेन्द्रश्चलतीति ॥

यत्सानोः । यदार्थलिप्सुः स्तोता सन् मनुष्यो गिरेर्गिरिमारोहति यदा वा भूरि कृष्यादिकं कर्म स्पृशति तदानीं तस्याभिलषितमर्थमिन्द्रो जानाति । ज्ञात्वा च वसुसमूहेन मरुद्गणेन वा सह वर्षणशीलस्तत्समीपमागच्छति ॥ २ ॥

**युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।**
**अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥**

[1] The anusvāra in वं completely worm-eaten.

[2] न and मा completely worm-eaten.

[3] Read मुच्छ्रितदेश.

[4] Read यदा भूर्यस्पष्ट.

[5] Read कर्त्वं.

[6] Read मर्थं.

[7] Read मिन्द्रश्चेतति.

युक्ष्व । योजय हि केशिनौ प्रशस्तकेशौ । हिर्यस्मिन् वाक्ये[1] प्रयुज्यते तर्थस्य[2] वाक्यान्तरार्थक्रिशषत्वं द्योतयति[3] । अप्रहा[4] च वाक्यार्थं वोगायुक्तस्तु परार्थ्यमेव द्योतयति[5] नोद्ग्रहणं ब्रूते[6] । केशा[7] के शेरते । कं शिरो भवति । हरी वृषणौ युवानौ । कक्ष्यप्राकक्ष्याय . . . . . कक्ष्या[8] रज्जुः कक्षं सेवते (नि. २. २) इति । अथास्माकमिन्द्र सोमस्य पातः गिरामुपश्रवणं चर । यत्रोपशृणोति गिरस्तत्रागच्छेति ॥

युक्ष्वाहि । योजय प्रशस्तकेशावश्वौ तरुणौ मेदुरतया कक्ष्यायाः पूरयितारौ । अथास्माकमिन्द्र सोमस्य पातः स्तुतीनामुपश्रवणं चर ॥ ३ ॥

[1] क्य in क्ये worm-eaten.

[2] Perhaps to read तदर्थस्य.

[3] The two syllables between र्थ and ष not at all clear. The second does not look quite like श, although that is the nearest approach. द्यो and त mostly worm-eaten.

[4] अप्रहा worm-eaten, but can be made out. Then there is something like a ए mark in a syllable, but without a consonant following and folio 7a ends. च is what begins the next page.

[5] Between द्यो and त there is space for $2\frac{1}{2}$ in. left blank as the leaf is bad for writing.

[6] The entire passage is corrupt and unintelligible.

[7] Read केशः

[8] About nine syllables are completely worm-eaten between य and क. क is at the end of the line and there is just one more letter which is completely damaged. क्ष्या is what begins the next line. Some bits of the worm-eaten letters which remain give no clue to the passage. Even the य after कक्ष्या before the worm-eaten portion is uncertain. I tried to identify the passage as—कक्ष्या अश्वरशना । क्सो नामकरणः । कक्ष्या रज्जुः But this too is uncertain. It is more likely कक्ष्यायाः पूरकौ मेदुरौ । कक्ष्या.

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव ।
ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय ॥

एहि आगच्छ स्तोमानिमानहि[1]स्वराभिः स्वरति[2] प्रशंसार्थः । अहि[3]स्वरन्ति चेतश्चाभिश्गृणीभि[4] । ओथामो देव[5] इत्यभिगर[6] । आरुव चान्तत उपश्लोक आरव[7] । ब्रह्म च स्तोत्रं[8] च नो यज्ञं चेन्द्र वसो सचा सह बन्धयेति[9] ॥

एहि स्तोमान् । आगच्छ स्तोमान् अस्मदीयान् सशब्देन मुखेन पुनःपुनः प्रोत्साहय । ओथामो दैव इत्यभिगृणीहि प्रतिगृणन्तमध्वर्युं शंसन्तं मां च नियुङ्क्ष्व । अस्माकमिन्द्र स्तोत्रं च सह वर्धय वासयितः ॥ (४)

उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥

[1] Read मानभि.

[2] Read राभिस्त्वरतिः

[3] Read अभि.

[4] After स्वरन्ति, there is only the ए mark in the syllable remaining; the consonant is completely worm-eaten. It may be चे. The reading is uncertain. After this, read अभिगृणीहि.

[5] Read दैव.

[6] Read गिर.

[7] Read आरुव.

[8] त्रं written and scored off.

[9] Read वर्धयेति.

8

उक्थम् । उक्थं शस्त्रम् । इन्द्राय शंसनीयम्[1] ।

अस्मा इत् काण्यं[2] वचन[3] (ऋ. वे. ५. ३९. ५) ।

इत्यत्र विशेषणमुक्थं वचनसस्तोतो[4] न सृज्यते । वर्धनं[5] पुरूणां निष्षेध्रो[6] । शक्रः शक्तः । यथा सुतेष्वस्माकं रमेत सख्येषु चेति ॥

उक्थमिन्द्राय । उक्थमिन्द्राय शंसनीयं बलस्य वर्धनमनेकेषां शत्रूणां निषेद्ध्रे यथा शक्रः शक्तः सोऽस्माकं यज्ञेषु सख्येषु चात्यन्तं रमेत ॥ (५)

**तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।**
**स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥**

तमित् तमेव सखित्वेऽपेक्षिते सखा भवेति । रयाचामहे[7] । तं राये तं सुवीर्ये । शक्त इन्द्रोऽस्मानपि शक्तान् करोति । स वसु दयमानः प्रयच्छन्निति ॥

तमित् सखित्वे । तमेव सखित्वेऽपेक्षिते सखा भवेति याचामहे । तमेव धनार्थं तमेव शोभनबलार्थम् । स शक्त इन्द्रो धनं प्रयच्छन्नस्मान् शक्तान् करोतु ॥ (६)

[1] शंसेनीयम् ; then ए mark deleted by a small vertical line above.

[2] Read काव्यं.

[3] Read वचः instead of वचन.

[4] Read विशेषणमुक्थं वचनस्य । ततो. श in शे, क्थ in क्थं and ए mark in the final तो worm-eaten.

[5] व worm-eaten.

[6] Perhaps to read निष्षेद्ध्रे.

[7] Delete र in the beginning of the word.

**सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।**
**गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥**

सुविव्रतं सुष्ठु प्रकाशितमनल्पत्वात् । सुनिरजं सुष्ठुयाचमानेभ्यो निरजनीयम् । इन्द्र त्वया दत्तमेवं नाम । तथा सति गवां व्रजमपावृधि । विद्य[1] तद्द्वारं कुरु । व्रजिरावेष्टनार्थः । कृणुष्व रायोवाव्रतमस्माकम्[2] । अद्रिवो वज्रिन् । अद्रिर्वज्रमादृणात्यमित्रानिति ॥

सुविवृतम् । सुष्ठ्वपावृतं दिगन्तेषु महत्तया सुष्ठुच निर्गच्छदिन्द्र त्वया दत्तमेवान्नं स त्वं दानाय गोव्रजद्वारमपावृधि । कुरु धनमस्मभ्यमद्रिवः । अद्रिरादृणात्यमित्रानिति वज्रः । तद्वन् ॥ (७)

**नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।**
**जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥**

नहि त्वा । न हि त्वा रोदसी उभे धावापृथिव्या[3] उभे अपि । रोदसी रोधनात् । आभ्यां हि निरुद्धमाकाशम् । अपि वा सर्वं भूतजातं मध्यस्थं निरुणद्धानो[4] । माध्यमिका वाक् चेन्द्रोदितीति[5] अन्तोदात्तं च । तदपरिगृहीतं शाकल्येन ॥

विषितस्तुका रोदसी (ऋ. वे. १. १६७. ५) ॥

[1] Not intelligible.
[2] Perhaps to read राधोऽस्माकम् .
[3] Read द्यावापृथिव्यौ.
[4] Perhaps to read निरुद्धम् .
[5] Read माध्यमिका वाक् चेत् रादसी इति.

सच[1] मरुत्सु रोदसी (ऋ. वे. ५. ५६. ८) ॥

स च मरुत्सु रोदसी[2] मित्यक्ष[3] येषु रोदसी (ऋ. वे. ६. ५०. ५) ॥ इति[4]

न रोदसी अप नुदन्त घोराः (ऋ. वे. २. १६७. ४) ॥

इत्येतदेकमन्तोदात्तं परिगृहीतम्[5] । तत्र माध्यमिकोऽग्निर्माध्यमिका वाग्रोदसी[6] भवतः । यत्त्विदं

आ रोदसी वरुणानि[7] शृणोतु (ऋ. वे. ५. ४६. ८)[8] ॥

इति । अत्र यास्के[9]नोक्तम्—रोदसी रुद्रस्य पत्नी इति[10] । तदभिमतं[11] शाकल्यस्य । स हि प्रगृह्णाति । जिघासमाणं[12] हिंसन्तं सपत्नान् । इन्वको[13] वारयतः । तथा सति जेषो जयः वृत्रहनने । स्वर्वतीः अपः-[14] सरणवती[15] अपः । सु[16] धूनुहि अस्मभ्यम् । गागति रप[17] इति ॥

[1] Read सचा.

[2] This is unnecessary repetition.

[3] Read मिम्यक्ष.

[4] रादसी with final accent occurs also in R. VI. 66. 6.

[5] It occurs also in R. V. X. 92. 11.

[6] Perhaps to read माध्यमिका वा वाग्रोदसी.

[7] Read वरुणानी.

[8] This occurs also in R. V. VII. 34. 22.

[9] Folio 7 *b* ends here.

[10] Nirukta 12. 46.

[11] Read तत्राभिमतं or तदनभिमतम् .

[12] Read जिघायमाणं.

[13] Read इन्वतो.

[14] Read अप.

[15] ण completely and वती half worm-eaten. Read सरणवतीः

[16] Read सं

[17] Not quite intelligible. Perhaps गा गतिमतीरप.

नहि त्वा। नहि त्वा द्यावापृथिव्यावुभे अपि घ्नन्तं मेवं महत्तया व्याप्नुतः। तथा सति स त्वं जय। दिवि स्थिता अपो जित्वा चास्मभ्यं ता अपः संधूनुहि ॥ (८)

आश्रु॑त्कर्ण श्रु॒धी हवं॒ नू चि॑द्दधिष्व मे॒ गिरः॑ ।
इन्द्र॒ स्तोम॑मि॒मं मम॑ कृ॒ष्वा यु॒जश्चि॒दन्त॑रम् ॥

आश्रकर्ण[1] आश्रत्कर्णोदरम्[2]। यस्य कर्णावभिलषितं स्तोतुं[3] शृणुतः। यदिवा पूरेऽपि[4] सन् यः स्तोतुः शिरः[5] शृणोति। उत त्वान्वधिरं वयम्[6]। श्रुधि ह्वनाम्[7]। क्षिप्रं धारय मदीया गिरः। एतदेव स्पष्टमाह। इन्द्र स्तोममिमममम्यस्वरूपकर्तुमित्यादिकम्[8]। कृष्व। युजः पुत्रादिकादपि। अन्तरं अन्तरो मे सारवन्तात् अभिभवत्यन्तमासञ्च[9]। कर्णः कृणर्ते[10]। कृन्ततेति यास्क[11] इति ॥

आश्रुत्कर्ण। आभिमुख्येन निवेदितस्य श्रवणपरकर्ण शृणु ह्वानम्। क्षिप्रमेव हृदये धारय मदीया गिरः। इन्द्र स्तोमं चेमं मदीयं सहायादपि तव सन्निकृष्टं कुरु ॥ (९)

[1] Read आश्रुत्कर्ण.
[2] Read आश्रुत्कर्णोदर.
[3] Read स्तोतुः
[4] Not intelligible.
[5] Read गिरः
[6] Not intelligible.
[7] Read ह्वानम्.
[8] Read स्तोममिमं मम सुरूपकृत्नुं (ऋ. वे. १. ४. १) इत्यादिकम्.
[9] The passage from अन्तरं quite unintelligible.
[10] Thie is from कृ Cf. Madras University Sanskrit Series No. 7, pt. 2, III, 10.
[11] Cf. Nirukta 1. 9. Read कृन्ततेरिति यास्क।

**विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।**
**वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥**

विमा[1] हि जानीमहि त्वामतिशयेन वर्षितारम् । उपस्थितेषु संग्रामेष्वह्वानस्य[2] श्रोतरम्[3] । स्तोतॄणां वर्षितृतमस्य ह्वयामह ऊतिं सहस्रासातम्रं[4] रक्षासहस्राणि प्रयच्छति ॥

विद्माहि । जानीमहि त्वामतिशयेन वर्षितारं सङ्ग्रामेषु च योद्धृणामाह्वानस्य श्रोतारम् । अतस्तव अतिशयेन सहस्रस्य दातिमूतिं हवामहेऽस्माकमियमस्त्विति ॥ (१०)

**आ तू नं इन्द्र कौशिक मन्दसानः सुतं पिब ।**
**नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥**

आतू । आपिब शीघ्रं न इन्द्र सुतं कौशिक । वृत्रेण युध्यन्निन्द्रा[5] स्वाध्यायकालालाभाद्वेदान्निराचकार । स वृत्रं हत्वा विश्वामित्रमुपेत्य तान् पुनरध्यैष्ट । साध्य[6] कौशिकता इति शाट्यायनकमुक्तम् । कौशिको [7]भ स्मैनमब्राह्मणमुपनिपत्य (ता. ब्रा. १. १) इति च ताण्डकम् । स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । सास्य कौशिकता (तै. ब्रा.

[1] Read विद्मा.
[2] Read संग्रामेष्वाह्वानस्य.
[3] Read श्रोतारम् .
[4] Read सहस्रसातमं.
[5] Read युध्यन्निन्द्रः
[6] Read सास्य.
[7] Read ह.

१. ५. १०. २) इति अध्वर्युब्राह्मणम् । सन्दसानो[1] मोदमानः । सप्तात्मरूपजनः[2] । नव्यं नवकाम्[3] । अपभृ[4] स्तुत्यम् । आयुः प्राणानां चिरमयनम् । प्राणेष्वेवायुर्दधाति सर्वत्वाय (तै. ब्रा. ३. २. ३. ३) इति ब्राह्मणम् । कृधि सहस्रसामृषिं मधुच्छन्दः सभृषिमर्षेर्दर्शनार्थात् दर्शनार्थात् दर्शनमर्थस्यापिव्यामन्त्राणामेवेति[5] ॥

आतूनइन्द्र । पुत्रमिन्द्रसममिच्छन् कुशिको ब्रह्मचर्यं चचार । तस्येन्द्रः स्वयमेव पुत्रोऽभूत् । सास्य कौशिकता । स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । सास्य कौशिकतेति वा ब्राह्मणम् । आभिमुख्येन क्षिप्रं पिबेन्द्र कौशिकास्माकं प्रहृष्यन् सोमम् । नवतममायुश्च सुष्ठु प्रवर्धय । कुरु च सहस्रधनस्य संभक्तारं मधुच्छन्दसमृषिम् ॥　　　　(११)

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ ।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥

परित्वा । परिवृणक्तु त्वा गिर्वणः । उमा[6] गिरः सर्वतः । वृद्धायुमनु-वृद्धयः । वृद्धायुः त्वममसि[7] । तं त्वामन्वस्माकमपि वृद्धयो भवन्तु । तथा

[1] Read मन्दसानो.

[2] Not quite intelligible.

[3] Read नवतमम् .

[4] Perhaps to read अथवा.

[5] The passage from मधुच्छन्दः is very corrupt. Read मधुच्छन्दसम् । ऋषिर्ऋषेर्दर्शनार्थात् । दर्शनमर्थस्य । अपि वा मन्त्राणामेव इति ॥

[6] Read इमा.

[7] Read त्वमसि.

जुष्टस्वमसि[1] । तं त्वामन्वस्माभिरपि जुष्टाः सेविका[2] भवन्तु जुष्टयः पर्याप्तय इति[3] ॥

परित्वा गिर्वणः । 'सुरूपकृत्नुमूतय' इत्याद्या गिरः त्वां गीर्भिर्वननीय सर्वतः परिभवन्तु परितो भवन्तु । तथा वर्धितं त्वामन्वस्माकं वृद्धयो भवन्तु । पर्याप्ताश्च भवन्त्वस्माकं श्रियः ॥ (१२)

---

**इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ ।**
**र॒थीत॑मं र॒थीनां॒ वाजा॑नां॒ सत्प॑तिं॒ पति॑म् ॥**

इन्द्रम् । जेता माधुच्छन्दसः[4] । तस्यैव नामान्तरं धरञ्जय[5] इति । यत्तु शाट्यायनके[6] काण्व[7] मेधातिथिं प्रकृत्योक्तं— तेन वलादस्मात् यनात्[8] पशूनुदसृजत् ।

[1] Not wanted.

[2] Read सेविता.

[3] Here there is the figure 10 to mark the end of the sūkta.

[4] Originally written माधुच्छान्दसः and the long mark in च्छा deleted by a dot above ; न्द worm-eaten.

[5] Read धनञ्जय. This atternative name is not noted in any of the Anukramaṇis. Mādhava son of Vinkaṭārya mentions the name in the Kārikās preceding his commentary of RV. cf. Madras University Sanskrit Series No. 2 ārṣānukramaṇī ; section viii ; stanza 2. But he mentions nothing about it in his commentary on this sūkta.

[6] Folio 8*a* ends with शाट्यायन.

[7] Read काण्वं.

[8] Read धनात्.

पुरां भिन्दुर्युवा किर्विः[1] (ऋ. वे. १. ११. ४)

इत्येकववलमभिनत्व[2]

त्वं वलव्य[3] गोमतः (ऋ. वे. १. ११. ५)

इत्येतया बिलमपावृणोत् इति । तत् सामाभिप्रायम् । इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः । समुद्रं समुन्दनादन्तरिक्षम् । व्यचो व्याप्तिः । समुद्रसदृशं चो[4] यस्य । रथीतमं रथीनाम् । रथो र . हतोर्गत्यर्थाम्[5] । रधि[6] गमनवान् । अपि भ्र[7] रथवान् प्रशस्कैरथः[8] । रथीरध्वराणाम (ऋ. वे. १. ४४. २)[9] इति शंसति । असौ वै रथीरध्वराणाम्[10] इति चोक्तम् । तथा वाजानां फलानामन्नानां वा पतिः साधवः सन्त इति[11] ।

इन्द्रं विश्वाः । जेता माधुच्छन्दसः । इन्द्रं विश्वाः स्तोतॄणां गिरोऽवर्धयन् । अन्तरिक्षस्येव यस्य व्याप्तिरतिशयेन । रथिनामन्नानां सतां च पतिम् ॥ (१)

**सख्ये त इन्द्र वाजिनो मा भे'म शवसस्पते ।**
**त्वाम॒भि प्र णो'नुमो जेता॑र॒मप॑राजितम् ॥**

[1] Read कविः

[2] Perhaps to read इत्येतया वलमभिनत् ।

[3] Read वलस्य.

[4] Read व्यचो instead of चो.

[5] रथो र ; then space left blank for one letter ; then हतोर्गत्यर्थाम् । Read रथो रंहतेर्गत्यर्थात् ।

[6] Read रथी.

[7] Perhaps to read अपिवा.

[8] Read प्रशस्त.

[9] Also R. V. VIII. 11. 2.

[10] Not traced.

[11] Perhaps to read साधकः सन्निति.

सख्ये । सख्ये तवेन्द्र लब्धे सति वाजिनो बलवन्तो वयं मा भिभेम सपत्नेभ्यः शवसस्पते । त्वामभिप्रणोनुमः[1] जेतारमपराजितम् ॥

सख्ये ते । त्वया सख्ये सति बलिनो वयं न कुतश्चिद् बिभेम । बलस्य पते त्वां च प्रकर्षेणाभिष्टुमो जेतारमपराजितम् ॥ (२)

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥

पूर्वीः । पूर्व्यः पूरणा बह्व्य इन्द्रस्य रायो दानानि भवन्ति । न विदमस्य न्यूतयः[2] परिपालनानि धनैः कृतानि स्तोत्राणाम्[3] । यदि वामस्यान्नस्य[4] गोतमः[5] स्तोतृभ्यो महते । वाजं गोमन्तं यदि प्रयच्छेत्[6] । यदि च मघं धनं प्रयच्छेत्तदा न विदस्यन्त्यूतयः । मघं महनीयमिति ।

पूर्वीरिन्द्रस्य । बहूनीन्द्रस्य दानानि रक्षणानि च न शुष्यन्त्युपर्युपरि वर्धन्ते यद्ययमन्नस्य गोयुक्तस्य स्तोतृभ्यो महनीयं सङ्घं प्रयच्छति । तदानीं तेन दत्तानि धनानि तन्मुखानि रक्षणानि च न शुष्यन्ति बहुत्वादिति ॥ (३)

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥

[1] Read प्रणोनुमः स्तुमः । स्तु completely worm-eaten.

[2] Read न विदस्यन्त्यूतयः

[3] Read स्तोतॄणां.

[4] Read वाजस्यान्नस्य.

[5] Read गोमतः

[6] प्रय mostly worm-eaten.

पुरां भेत्ता युवा संभवमयो[1] । युवा यनातेर्मिश्रणार्थार्थात्[2] । कविः क्रान्तः कर्ता वा । अमितौजा महाबलाः[3] । ओज उब्धतेरहिभवकर्मणः[4] । अजायतमानुर्यदिवा[5] दिवः । इन्द्रो विश्वस्य कर्मणो धर्ता वज्री बभुभिः[6] स्तुत । इति ॥

पुरां भिन्दुः । पुरां भेत्ता युवा क्रान्तकर्मामितबल आसीदिन्द्रो विश्वस्य कर्मणो धर्ता वज्री बहुभिः स्तुतः ॥　　　　(४)

**त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।**
**त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥**

त्वं वलस्य । पणयो देवलोकात पशूनासृत्य[7] गुहायां निधाय वलेनासुरेण मेघभूतेनापिदधुरिति बहुभ्यो मन्त्रेभ्यो ब्राह्मणेभ्यश्च समाहृत इतिहासः । त्वं वलस्य भोमतो[8] विलमपावरपावृतपानसि[9] । अद्रिवो वज्रिन् । विवृतद्वारमकुथाः । ताण्डकम्——सुराणां वै वलस्तमसा प्राविताेऽश्मापिधान आसीत् । तस्मिन् गव्यं वस्वं नासीत्—इति ।

[1] Not intelligible.

[2] Read यौतेर्मिश्रणार्थात । In the Grantha Script यन instead of यौ indicates that the original was in Malayalam Script, in which it is easy to confuse between यौ and यन.

[3] Read महाबलः

[4] Read उब्जतेरभिभवकर्मणः

[5] Not intelligible.

[6] Read बहुभिः

[7] Read पशूनाहृत्य.

[8] Read गोमतो.

[9] Read वृतवानसि.

ततस्त्वां देवा अभिहिवांसः[1] तुज्यमानासः पीड्यमानाः फणिभिः आविष्वन्वगच्छन्[2] । बिलं बिलेर्भेदनार्थात् । बिभर्तिः[3] इति यास्कः (नि. २. १७) इति ॥

त्वं वलस्य । त्वं बलासुरस्य गृहीतपशोरपावृतवानसि वज्रिन् बिलम् । 'इन्द्रो वलस्य बिलमपोर्णोत् । स उत्तमः पशुरासीत्' इति ब्राह्मणम् । त्वामग्रे गच्छन्तं देवा अबिभिवांसस्त्वत्सन्निधानात् पणिभिर्हिंस्यमानास्तव जयार्थमागता इति ॥ (५)

**तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।**
**उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥**

तवाहम् । तवाहं शूर रातिभिर्धनैः स्वतो धनानि[4] ग्रहीत्वा नं[5] प्रति गतवानस्मि । सिन्धुमावदन् तव धनानामिदं स्यन्दनं दानं प्रष्टुभ्य[6] आवदं[7] इन्द्रेणेमा[8] मह्यं गावो दत्ता इति । एतदेव परोक्षमाह—उपातिष्ठन्त त्वां गिर्वणः[9] स्तुतिभिरिमे णकारवो[10] विदुश्च ते तस्य तं त्वामुदारमज्ञाविषुः । अपिवा तदा कर्म विदुर्दानमिति[11] । कारवः । कर्तारः स्तोमानां ॥

[1] Read अबिभिवांसः
[2] Read पणिभिः आविषुरन्वगच्छन् ।
[3] Read बिभर्तेः
[4] Folio 8*b* ends here.
[5] Perhaps to read गृहीत्वा तं ; त्वा is partly worm-eaten and is not quite decipherable. It is only a conjecture.
[6] Read प्रष्टृभ्य.
[7] Perhaps to read आवदन् ; व partly worm-eaten.
[8] म in मा completely worm-eaten.
[9] र्वण partly worm-eaten.
[10] ण in the begining not wanted ; or perhaps some bit may be missing before that.
[11] Not quite intelligible from तं त्वा.

तवाहम् । तवाहं शूर रातिभिस्त्वत्तोऽहं शूर धनानि गृहीत्वा प्रतिगतवानस्मि । कुतस्त्वयेमानि धनानि लब्धानीति प्रगृह्यस्तव धनानाम् । स्यन्दनमाभिमुख्येन वदन्निन्द्रादिमानि लब्धानीति मामुपातिष्ठन्ताध्वगाः । गीर्भिर्वननीय ते तस्य कर्म प्राज्ञा जानन्ति । तेषामस्माकं वर्धयान्नानीति ॥ (६)

**मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।**
**विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥**

मायाहीन्द्र[1] । . . . व्याजः[2] मिमेतेर्विस्तारार्थात्[3] । मायाभिः अतिसन्धानोपायैः । निहत्वं[4] मायिनं शुष्णं दानवं अवातिः रोवधीः[5] । शुष्णः शोषयति भूतानि । विदुष्टे तस्य मेधिरा मेधाविनः । तेषां श्रवांस्यन्नानि[6] उत्तिर वर्धयः । श्रवोऽन्वि[6] श्रावयतीति ॥

मायाभिरिन्द्र । मायाभिरेवेन्द्र त्वं मायाविनं शुष्णासुरं व्यनाशयः । तव तत् कर्म प्राज्ञा जानन्ति । तेषामस्माकं वर्धयान्नानि ॥ (७)

**इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।**
**सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥**

[1] Read मायाभिरिन्द्र.

[2] Read माया व्याजः ; space for two syllables left blank ; the long mark in या is written.

[3] Read मिमीतेर्विस्तारार्थात्. This is not the derivation given in the uṇādis.

[4] Read इन्द्र त्वं.

[5] Read अवातिरः अवधीः

[6] Read श्रवोऽन्नं.

इन्द्रम् । इन्द्रमीशानं सर्वस्य बलेनाभ्यनूषत स्तोमास्तोतारः । सहस्रं यस्य रातयः सन्ति । यदिवा भूयस्य इति[1] ॥

इन्द्रमीशानम् । इन्द्रमीश्वरं बलेन सर्वस्यास्मदीयाः स्तोमा अभ्यस्तुवन् । सहस्रसङ्ख्यायुक्तानि यस्य दानान्यपि विद्यन्ते भूयांसीति ॥

---

अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥

अग्निम् । काण्वो मेधातिथिः । अग्निं दूतं वृणीमहे इति दूतत्वं विधेयम् । दूते[2] द्रवतेः । होतारं विश्ववेदसं व्याप्तधनम् । वेदो विन्दतेः । अस्य यज्ञस्य सुक्रतुं सुकर्माणं सुप्रज्ञं वा । यो यज्ञस्य होता भवति तं वयं दूतं वृणीमह इति ॥

यजिष्ठं त्वा ववृणीमहे[3] (ऋ. वे. ८. १९. ३) ॥

इत्यस्यां अस्य यज्ञस्य सुक्रतुम् इति पादो न सृष्टः । तत्र हि होतृत्वं विधेयम् । यद्वा सापेक्षस्स पादः । अपि वा सुक्रतुस्तत्र शोभनः कर्तेति ॥

अग्निं दूतम् । मेधातिथिः काण्वः । अग्निं दूतं वृणीमहे होतारं सर्वधनिनमस्य यज्ञस्य सुप्रज्ञम् ॥ (१)

[1] Though the Sūkta ends here, there is nothing like the figure 11 to mark the end.

[2] Read दूतो.

[3] Read ववृमहे.

**अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥**

अग्निमग्निम् । एकोऽप्यग्निः भेदात्[1] अनेक इव भव[2] । देशभेदादित्यपरे । तन्न समञ्जसम् । अग्निमेव भूयो हवीमहि[3]स्तुतिभिर्भवन्त[4] शिश्पतिं[5] विशां पतिं विशां पालधिकारम्[6] । विशो निविशन्त इति । हविषां वोढारं[7] पुरूणां प्रियम् । प्रियः प्रीणातेरिति ॥

अग्निमग्निम् । अग्निमेव ह्वानैः सदा आह्वयन्ति नरा विशां पतिं हविषां वोढारं बहूनां प्रियम् ॥ (२)

**अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥**

अग्ने देवाँ इहावहारण्योर्जायमानो वृक्तबर्हिषे यजमानाय मह्यम् । येन पृक्तं[8] लूनं भवति । बहिर्बभेरुद्गमनार्थात्[9] । असि भवसि होतार[10] ईड्य इति[11] । होतृत्वानुकीर्तनं[12] आवहनायेति ॥

[1] Read व्यक्तिभेदात् instead of भेदात्.

[2] Read भवति.

[3] Read हवीमभिः

[4] Read स्तुतिभिर्ह्वन्त.

[5] Read विश्पतिं.

[6] Read पालयितारम्.

[7] ढा worm-eaten.

[8] Read वृक्तं Perhaps to add बर्हिः before वृक्तं.

[9] Perhaps to read बर्हिर्बृहेरुद्गमनार्थात् cf. N. 8. 8.

[10] Read होता न.

[11] इति worm-eaten.

[12] तृत्वा worm-eaten.

अग्ने देवा। अग्ने देवानिहावह जानन् यजमानायासि ह्यस्माकं होता स्तोतव्यः ॥ (३)

**ताँ उ॒श॒तो वि बो॑धय॒ यद॑ग्ने॒ यासि॑ दू॒त्य॑म्। दे॒वैरा स॑त्सि ब॒र्हिषि॑ ॥**

ताँ उशतः। तान् देवानुशतः कामयानात् हर्वोक्षि[1] स्तुतीश्च। विबोधयागच्छ। यद्यदा। त्वमग्ने याहि[2] दूत्यं दूतकर्म कुर्वस्योसि देत्यर्थः[3]। तैर्देवैरासीद चस्मिन्[4] बहिवीति[5] ॥

ताँ उशतः। तान् देवान् कामयमानांस्त्वं विबोधय। यदा त्वमग्ने गच्छसि दूत्यम्। त्वमपि तैः सहासीद बर्हिषि ॥ (४)

**घृता॑हवन दीदिवः॒ प्रति॑ ष्म॒ रिष॑तो दह। अग्ने॒ त्वं र॒क्ष॒स्विनः॑ ॥**

घृताभवन[6] घृतं + + + + यते[7] प्रियममं[8] स घृताहवनः। वृतं जिघर्तैः[9] क्षरणार्थात्। दिवो[10] दीप्यमानः। प्रतिदह रिषतो

[1] Read कामयमानान् हवींषि.

[2] Read यासि.

[3] Read कुर्वन् यासि यदेत्यर्थः

[4] Read चास्मिन्.

[5] Read बर्हिषीति.

[6] Read घृताहवन.

[7] After घृत in घृताभवन, the leaf is worm-eaten, and after घृतं there are about five syllables too damaged to be deciphered and folio *9a* ends. यते is what begins on folio *9b*. Perhaps the passage is घृतं यस्मिन्नाहूयते.

[8] Perhaps to read प्रियतमं.

[9] Read जिघर्तेः.

[10] Read दीदिवो.

हिंसकान् । अग्ने त्वं रक्षस्विनो बलवतः । राक्षा[1] बलं रक्षतीति । राक्षसश्चेद्रक्षा[2] रक्षितव्यास्मादिति[3] ॥

घृताहवन । घृतं यस्मिन्नाहूयते प्रियतमं स घृताहवनः । दीप्यमानः प्रतिदह हिंसकान् राक्षसानग्ने त्वं बलवतः ॥ (५)

**अ॒ग्निना॒ग्निः समि॑ध्यते क॒विर्गृ॒हप॑ति॒र्युवा॑ । ह॒व्य॒वाड् जु॒ह्वा॑स्यः ॥**

अग्निना । अग्निना[4] निर्मन्थ्येराहवनीयोऽग्निः[5] यज्ञेषु समिध्यते । यज्ञेन वै तद्देवा यज्ञमयजन्त (ऐ. ब्रा. १. १६) इत्युक्तम् । कविर्गृह-पतिर्युवा । वोढा[6] । जुहुवास्यो[7] यस्यास्यं देवानां जुहूर्भवतीति ॥

अग्निनाग्निः । निर्मथ्याग्निनाहवनीयाग्निः समिध्यते । कविर्गृहपतिर्युवा हविषां वोढा जुहूर्यस्यास्यस्थानीया ॥ (६)

**क॒विम॒ग्निमुप॑ स्तुहि स॒त्यध॑र्माणमध्व॒रे । दे॒वम॑मीव॒चात॑नम् ॥**

[1] Read रक्षो.

[2] Read राक्षसश्चेद्रक्षो.

[3] Read रक्षितव्योऽस्मादिति. The long mark in व्या is completely worm-eaten.

[4] अग्नि mostly worm-eaten.

[5] Read निर्मथ्येनाहवनीयोऽग्निः

[6] Perhaps to read हविषां वोढा.

[7] Read जुह्वास्यो.

कविम् । कविमग्निमुपस्तुहि सत्यधर्माणां[1] सति भवन्ताथाभूतममायं[2] । सत्सु तायमानमित्यपरम् । अध्वर[3] । देवममीवचातनं रक्षः-प्रभृतेश्चातकमिति मिवामेरभिभवार्थादिति[4] ॥

कविमग्निम् । कविमग्निमुपस्तुहि सत्यधर्माणं यज्ञे द्युस्थानं रक्षसां चातयितारम् ॥ (७)

**यस्त्वाम॑ग्ने ह॒विष्प॑तिर्दू॒तं दे॑व स॒पर्य॑ति । तस्य॑ स्म प्रावि॒ता भ॑व ॥**

यस्त्वाम् । यस्त्वामग्ने यजमानो दूतं देव सपर्यति तस्य त्वं[5] रक्षको भवति ॥

यस्त्वामग्ने । यस्त्वामग्ने यजमानो दूतं देव परिचरति तस्य त्वं प्रकर्षेण रक्षको भव । स्मेति पूरणम् ॥ (८)

**यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति । तस्मै॑ पावक मृळय ॥**

यो अग्निम् । यो अग्निं देववीतये यज्ञार्थम् । देवा यस्मिन्नन्दन्ति तदर्थम् । भविष्मान्[6] परिचरति तस्मै पावक भ्रळय[7] । मृळयतुश्च सुखोपादार्थे[8] । चतुर्थी च तयोर्योगे भवतीति ॥

[1] ध mostly worm-eaten. Read सत्यधर्माणं.

[2] This explanation not intelligible.

[3] Read अध्वरे.

[4] Read रक्षःप्रभृतेश्चातकम् । अमीवामेरभिभवार्थात् इति.

[5] स्य त्वं partly worm-eaten.

[6] Read हविष्मान्.

[7] Read मृळय.

[8] Read मृळयतिश्च सुखोत्पादार्थे.

यो अग्निम्। योऽग्निं यज्ञार्थं हविष्मान् परिचरति तस्मै पावक सुख-मुत्पादय ॥ (९)

**स नः पावक दीदिवोऽग्ने देवाँ इहा वह । उप यज्ञं हविश्च नः ॥**

स नः। वैद्युत आप्यः पावकः। स नः पावक दीदिवोऽग्ने देवाँ इहावह। पावकविशेषणमग्निः। तस्मात् पादो न विसृष्टः। यदि वा वहेत्यपर्यवसितार्थम्। आवह चोपवभ[1] चेति। तेषु देवेषु यज्ञं प्रीणनं भविः[2] उपवह चेति ॥

स नः पावक। सोऽस्माकं पावक दीप्त अग्ने देवानिहावह। हविश्चास्माकं श्रृतं यज्ञमुपप्राप्तम् ॥ (१०)

**स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ॥**

स नः। सोऽस्मभ्यं स्तूयमान आहर गायत्रेणानेन सूक्तेन निवी-यसा[3]। रयिं धनम्। वीरवदन्नं च। यदि वा वीरयुक्तामिष्यमाणां स्पृहणीयामिति ॥

स नः स्तवानः। सोऽस्मभ्यं स्तूयमानो गायत्रेण साम्ना नवतरेण रयिं वीरयुक्तमन्नं चाहर ॥ (११)

**अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नः ॥**

[1] Read चोपवह.

[2] Read हविः

[3] Read नवीयसा.

अग्ने । अग्ने शुक्रेण शोचिषा वैद्युतेनाग्निना पावकेन सह विश्वाभिर्देवभूतिहिर्न्यै+[2] ज्यपृष्ठैस्सहेमं स्तोतं[3] जुषस्व[4] नः । स नो मित्यत्र महस्वमित्यत्राग्ने शुक्रेण शोचिषोरुप्रथयसे बृहदिति करणे इति कौ पादौ नाम्नदिति[5] ॥

अग्ने शुक्रेण । अग्ने ज्वलता तेजसा सर्वैश्च देवाह्वानैर्युक्तस्त्वमिमं स्तोमं सेवस्व नः ॥ (१२)

---

सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च ॥

सुसमिद्धः । ब्राह्मणो[6] अप्रिदेवताः[7] । तासु देवतानां समिदादीनामुक्तिमात्रेण देवतात्वम् । सर्वाण्येव वचनानि यज्ञाङ्गनानि[8] । तत्र समिधः

[1] Read हूतिभि.

[2] After न्यै space for one letter left blank. The आ mark is written. The syllable must be रा.

[3] Read स्तोमं.

[4] स्व partly worm-eaten.

[5] The passage from स नो is corrupt. The reference is to R. V. VIII. 44. 14 and X. 21. 8. The औ mark in दौ is completely worm-eaten. There is the figure 10 after नाम्नदिति. But this is the end of sūkta 12.

[6] Not intelligible.

[7] Read आप्रीदेवताः

[8] Read यज्ञाङ्गानि.

काष्ठान्येव । सुसमिद्धो नः मह्यं आवह देवाँ अग्ने हविष्टुमे[1] । होतः पावक यक्षि च[2] यज तानिति ॥

सुसमिद्धो नः । आप्रीणामग्न्यादयो देवताः । समिदादीनां यज्ञाङ्गानामुक्तिमात्रमिति । सुसमिद्धस्त्वमग्ने अस्माकं यजमानाय देवानावह । होतः शोधयितः तान् यज च ॥ (१)

**मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतये ॥**

मधुमन्तम् । मधुमन्तं सरस्वन्तम्[3] तनूनपाताप्येग्निः[4] । तन्व आपः । तासां पुत्रो भवति ॥

अपां नपादा ह्यस्थादुपस्थम् ॥ (ऋ. वे. २. ३५. ९) ।

अपि वाराण्यो[5] स्थितोऽग्निस्तुस्तनूनपा[6] । + + ते गर्भ आसर इति[7] । अद्भिश्च मधुमद्धविर्भवति काष्ठैश्च । यज्ञं हविर्देवेषु[8] नः कवे अद्य कुर्वशनायेति ॥

[1] Read हविष्मते.

[2] Folio 9*b* ends here.

[3] Not intelligible.

[4] Read तनूनपात् आप्योऽग्निः

[5] Read अपिवारण्योः

[6] Read स्थितोऽग्निस्तनूनपात् .

[7] The passage is not clear. After पा, two letters are completely worm-eaten. The first looks like द and the second must be a conjunct consonant with य as the second member; the य mark is slightly decipherable.

[8] First written वैषु. Then the first ए mark deleted by a small vertical stroke at the top.

मधुमन्तम् । आज्यवन्तं तनूनपात् यज्ञं हविर्देवेष्वस्माकं कवे अद्य कृण्व-शनाय ॥ (२)

**नराशंसमिह प्रियमस्मिन् यज्ञ उप ह्वये । मधुजिह्वं हविष्कृतम् ॥**

नराशंसम् । आध्वरिकोऽग्निर्नराशंसः । तमिहोपह्वये पियम्[1] । एतदेव विशदमाहा अस्मिन् यज्ञे उपह्वये इति । नराशंसं नृभिः[2] शंसनीयम् । मधुजिह्वं मादनजिह्वम् । हविष्कृतम[3] । जिह्वा जिहीतेर्ज्वाला भवति[4] । गार्हपत्ये हि हष्करमिति[5] ॥

नराशंसम् । नरैः शंसनीयमग्निं प्रियमिहोपह्वये । अस्मिन् यज्ञे इति विश-दवचनम् । मादयितृजिह्वं हविषां कर्तारम् ॥ (३)

**अग्ने सुखतमे रथे देवाँ ईळित आ वह । असि होता मनुर्हितः ॥**

अग्ने । अग्ने सुकथमे[6] रथे । यस्य कमक्षस्य[7] द्वारमत्यन्तं शोभनं तस्मिन् रथे स्थापयित्वा देवानीडितः स्तुतो याचितो वा आवह । असि होतु[8] मनुर्हितो मनुष्यैर्निहितः । मनो वा मनरिति[9] ॥

[1] Read प्रियम्.

[2] नृ mostly worm-eaten.

[3] त mostly worm-eaten.

[4] Not clear. Cf. N. 5. 26.

[5] Perhaps to read गार्हपत्ये हविष्कृतमिति.

[6] Read सुखतमे.

[7] Not intelligible.

[8] Read होता.

[9] Perhaps to read मनो वा मनुरिति.

